TRIVANDRUM SANSKRIT SERIES.

No. CV.

Śrī Setu Lakṣmī Prasādamālā

No. XVII.

THE

# NIDHIPRADĪPA

OF

Śrī Siddha Śrīkaṇṭhaśambhu

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1930.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०५.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः १७.

# निधिप्रदीपः

श्रीसिद्धश्रीकण्ठशम्भुविरचितः ।

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधितः ।

स च
अनन्तशयने
महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः ११०५, क्रैस्ताब्दाः १९३०.

॥ श्रीः ॥

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

"कृष्णाजापित्तं च मयूरपित्त-
मशोकमूलं गतमुत्तराशाम् ।
शशाङ्कगोरोचनमाक्षिकं च
सर्वाञ्जनं नाम शिवोपदिष्टम् ॥

पुष्यनक्षत्रयोगेन पिण्डीतगरमूलिकाम् ।
षडङ्गुलमितं कार्यं शलाकां रक्षयेत् ततः ॥" (p. 29).

occur in the 15th Upadeśa of the Mantrakhaṇḍa of the Rasaratnākara by Śrī Devīputra Nityanātha, while the introductory verse of the latter work,

"यद्यदुक्तं हि शास्त्रेषु तत्तत्सर्वं विलोकितम् ।
शाम्भवे यामिले शाक्ते कुलकौले च डामरे ॥

says that it is an abridgment from "Śāmbhava" (the Śāstra of Śambhu). If Śambhu referred to in the word Śāmbhava in the Rasaratnākara was the same as Siddha Śrīkaṇṭha Śambhu, then Nidhipradīpa may be taken as the source from which Rasaratnākara quoted the above verses. This work dealing as it does with various means of finding out hidden treasures may be considered as a valuable addition to the Trivandrum Sanskrit Series. The poet says that 'the earth is vast and time is unlimited' and it is not certain that an *Adhikāri* of this work may not turn up. I have therefore thought it advisable to preserve the work by publishing it in this Sanskrit Series, in accordance with the practice of protecting the work dealing with Dīrghasatra.

The edition of the work is based on the following three manuscripts.

(1) Belonging to the Palace Library, Trivandrum.
(2) Do. Brahmasri Rama Vadhyar Kasi Vadhyar, Mahadanapuram.
(3) Do. Brahmasri Devan Narayanan Namburipad, Kartigapalli, Haripad.

These manuscripts are complete and are respectively marked as क, ख and ग. The first manuscript appears to be about 4 centuries old. The second looks less old than the first and the third, more modern than the second.

K. SĀMBAŚIVA ŚĀSTRĪ

# निवेदना ।

निधिप्रदीपनामायं प्रतिपाद्यमहिम्ना कोऽप्यपूर्व एव ग्रन्थः । इह सन्ति चत्वारः परिच्छेदाः, येष्वादिमः प्रतिज्ञाकीर्तनेन, द्वितीयः प्रतिमालक्षणेन, तृतीयः परीक्षादर्शनेन, अन्तिमो निधिसङ्ग्रहणेन च यथावत् कृतविभागः । अस्य कर्ता —

"निधिप्रदीपनामायं सिद्धश्रीकण्ठशम्भुना ।
क्रियते सारमादाय सिद्धानां हितकारणम् ॥"

इति ग्रन्थोपक्रमकारिकया सिद्धश्रीकण्ठशम्भुनामा कोऽपि सिद्ध इति ज्ञायते । क्रतुनिर्वहणकृते निर्धनेभ्य ऋषिभ्यः शम्भुना भगवता समुद्दीपितोऽयं प्रदीप आम्नायवत् प्रभुसम्मितः प्रवृत्तिमात्रप्रतीक्षो भवत्यप्रतर्क्यं किमपि प्रमाणप्रकाण्डम् । इदं च ऋषिशम्भुसंवादप्रस्तावनया

"यष्टव्याः कथमस्माभिः क्रतवो निर्धनैरिव ।"
(पु० १. श्लो० ५)

"प्रवक्ष्यामि मुनिश्रेष्ठा! दारिद्र्यार्णवतारणम् ।"
(पु० २. श्लो० १०)

इत्याभिः कारिकाभिः कविरास्फोरयति । ग्रन्थावसितौ —

"यज्ञार्थमर्थसापेक्षा ऋषयो धर्मतत्पराः! ।
निधिसङ्ग्रहणं सर्वं मया प्रोक्तं यथाक्रमम् ॥
सर्वसम्पत्करं श्रेष्ठं सर्वदारिद्र्यनाशनम् ।
सर्वसौख्यमिदं शास्त्रं शबरेणैव भाषितम् ॥"

इति दर्शनाद्

"यष्टव्याः कथमस्माभिः क्रतवो निर्धनैरिव ।"

इत्यादिनोपक्रान्तस्य समुचित उपसंहारः समर्थितः । शबरभाषितस्यानुवादकतां परमात्मनः प्रतिजानानेन साममत्वमस्य प्रदीपस्य साधितम् । सोऽयं शबरः साक्षान्महेश्वरश्चेत् किरातवेषधारी, तदा पूर्वोपक्रान्तस्य ऋषिशम्भुसंवादस्यास्ति सामरस्यम् ।

"इति शबरभाषिते मालिनीशास्त्रे निधिप्रदीपे चतुर्थः परिच्छेदः।"
इति परिसमाप्तिगतं वाक्यं शबरीयं किमप्यन्यद् मालिनीशास्त्रमाकरग्रन्थं स्पष्टमाचष्टे; यत्रायं निधिप्रदीपनमार्गः किमप्यङ्गं सङ्गच्छते ।

अन्यच्च — श्रीदेवीपुत्रनित्यनाथविरचिते रसरत्नाकरे मन्त्रखण्डे पञ्चदश उपदेशे दृश्यमानाभिः —

१. "नकुलस्य च भेकस्य लोचनानि समाहरेत् ।
स्रोतोञ्जनसमायुक्तं मेषीतैलेन पेषयेत् ।
अञ्जिताक्षो नरस्तेन निधिं पश्यति निश्चयम् ॥"

इति,

२. "कुङ्कुमं रोचनं श्वेतकाञ्चनस्य तु पल्लवम् ।
सुश्वेतां च जपापुष्पं नन्द्यावर्तं समं मधु ।
सर्वाञ्जनमिदं ख्यातं पातालनिधिदर्शनम् ॥"

इति,

३. "कृष्णाजपित्तं च मयूरपित्तमशोकमूलं गतमुत्तराशाम् ।
शशाङ्कगोरोचनमाक्षिकं च सर्वाञ्जनं नाम शिवोपदिष्टम् ॥"
"पुष्यनक्षत्रयोगेन पिण्डीतगरमूलिकाम् ।
षडङ्गुलमितं कार्यं शलाकां रक्षयेत् ततः ॥"

इति च निधिप्रदीपकारिकाभिः, तदानुगुण्यात् कस्यचन शम्भोः कृतिं सप्रमाणं द्योतयता तत्रैव रसरत्नाकर उपक्रमे

"यद्यदुक्तं हि शास्त्रेषु तत्तत् सर्वं विलोकितम् ।
शाम्भवे यामले शाक्ते कुलकौले च सामरे ।"

इत्यादिना सारसमुद्धरणाधारतया 'शाम्भवे' इति वचनेन च यद्ययं शम्भुरसत्सिद्धश्रीकण्ठशम्भुरेव सम्भवेत् तदा रसरत्नाकरकारस्यापि प्रमाणभूतो निधिप्रदीपकारस्ततोऽपि प्राचीनः शक्यमभ्यूहितुम्, इति ।

---

१. निधिप्रदीपे पार्श्वे ३२. श्लो० १३०,१३१.
„ „ ३१. „ १२१,१२२.
३. „ „ २९. „ १०८,१०३.

इतोऽधिकमदसीयं जीवितसमयादिकं प्रति न किमप्यवगम्यते ।

सर्वथा रत्नगर्भाया भुवो गर्भे निभृतनिहितानां निधीनां स्थितिं सिद्धिबलाद् बहिरुदित्वरीभिस्तत्तन्मूलिकाभिरभिव्यञ्जिकाभिः सूक्ष्मेक्षिकयावगत्य निरूपितमिदं निधिशास्त्रमवश्यप्रकाश्यमस्मद्ग्रन्थावलेरपूर्वः कोऽपि निधिरेव ।

"कालो ह्ययं निरवधिर्विपुला च पृथ्वी'

इति महाकविवचनानुसारेण तत्तदधिकारिसम्पत्तेरसम्भाव्यतानिश्चयाभावाद् दीर्घसत्रलक्षणवद् मन्य एवमादीनि शास्त्राणि संरक्षणीयानि प्रसाधने प्रमुखानि ।

अस्य निधिप्रदीपस्य प्रसाधनप्रकाशनयोः परिशोधनोपयोगिन्यः समग्रा मातृकास्तिस्र उपलब्धाः । आसु—

प्रथमा — अस्मन्महाराजग्रन्थशालीया ।

द्वितीया — महादानपुरं ब्रह्मश्री रामवाध्यार् काशिवाध्यार्स्वामकी ।

तृतीया — कार्त्तिकप्पाळ्ळि हरिप्पाडु पडिञ्ञारे पुल्लांवळिमठं ब्रह्मश्री देवन् नारायणन्नम्पूरिप्पाडुस्वामिका । ताश्च यथाक्रमं क-ख-ग-चिह्निताः ।

आसु पूर्वपूर्वा जरती । विशिष्य च प्रथमा माकीं चतुश्शतवत्सरीज्यायसी ।

अनन्तशयनम्,
१०-१२-१०५.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# निधिप्रदीपः ।

## प्रथमः परिच्छेदः ।

निधिप्रदीपनामायं[1] सिद्धश्रीकण्ठशम्भुना ।
क्रियते सार[2]मादाय सिद्धानां[3] हितकारणम् ॥ १ ॥
ग्रन्थैश्चतुष्परिच्छेदैः पद्यैरानुष्टुभैरिह ।
शतानि पञ्च पद्यानि[4] विना मन्त्रपदैर्बुध ! ॥ २ ॥
दारिद्र्यानलतप्तानामगतीनां शरीरिणाम् ।
यायावरा महात्मान ऋषयो वेदपारगाः ॥ ३ ॥
अग्निष्टोमादिकान् यष्टुं कर्म[5]यज्ञा यथेप्सितम् ।
समेत्य नैमिशारण्यं मन्त्रयामासुराहृताः ॥ ४ ॥
यष्टव्याः कथमस्माभिः क्रतवो निर्धनैरिति ।
उपायः को भवेदत्र येन स्मो धनिनो वयम् ॥ ५ ॥
देवतानाम् ऋषीणां च ऋणमेतद् भविष्यति ।
इत्येवं चिन्तितानां च ऋषीणां भगवान् हरः ॥ ६ ॥
आजगाम महायोगी ऋषीणां धर्महेतुकम् ।

ऋषय ऊचुः —

देवदेव ! महादेव ! नील[6]ग्रीव ! महेश्वर ! ॥ ७ ॥

---

१. 'श्च मया कृतः सर्वार्थसिद्धये । सलक्षं सा' ख. पाठः. २. 'तु सङ्ग्राह्यमा' ग. पाठः. ३. 'द्धशब्दरतं नृप ॥' क. पाठः. ४. 'नि तावद्वाक्यपदैर्बुधः ॥', ५. 'यज्ञकामान् यथेप्सितान् ।', ६. 'कृपालय म' ग. पाठः.

G. P. T. 1503, 500. 16-1-1106. B

केनोपायेन मुच्यन्ते ब्राह्मणाः क्लेश[1]सागरात् ।
दारिद्र्यस्यैव हान्यै यत् तद् वाक्यं वक्तुमर्हसि ॥ ८॥

शम्भुः —

तदिदानीं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः! ।
निधिशास्त्रमिदं गुह्यं त्रिदशैरपि दुर्लभम् ॥ ९ ॥

प्रवक्ष्यामि मुनिश्रेष्ठा ! दारिद्र्यार्ण[2]वतारणम् ।
य[3]त् कृत्वा तु नरः कश्चिद् दारिद्र्यान्मुच्यते तथा ॥ १० ॥
[4]पञ्चपातकयुक्तोऽपि कुबेरसदृशो भवेत् ।
सहायलक्षणं वक्ष्ये निमित्तं च शुभाशुभम् ॥ ११ ॥
तिथिनक्षत्रवाराणां मुहूर्तनियमं तथा ।
जलस्थल[5]दिविष्ठानां निधीनां च विभेदतः ॥ १२ ॥
स्थानेषु च निधानानां परीक्षां च यथाक्रमम्[6] ।
परीक्षा बहुधा वृक्षलतागुल्मादिभेदतः ॥ १३ ॥
गोमृगाः कृमयश्चापि भूतयोगं तथैव च ।
विपरीतफलं पुष्पकण्टभेदं तथैव च ॥ १४ ॥
[7]महासत्त्वस्य संयोगं प्रतिशङ्कां तथैव च ।
गु[9]ल्मागुल्मविभेदं च सहस्राक्षधनुस्तथा ॥ १५ ॥
एवमादीनि चान्यानि लक्ष[10]णानि परीक्षयेत् ।
बिम्बलक्षणभेदं च वर्तीनां च यथाक्रमम् ॥ १६ ॥

---

१. 'शपारगाः ।', २. 'ठिधप्रणाशनम् ।' ग. पठः. ३. 'स्थानेषु च निधिस्थानं दारिद्र्यात् प्रतिमुच्यते ।' क. पाठः. ४. 'महापा', ५. 'निषण्णानां', ६. 'म् । स्थानानि च निधानानि निर्णयश्च यथाक्रमम् । प' ग. पाठः. ७. 'शत्रुस', ८. 'द्फलं तथा ।' क. पाठः. ९. 'गुल्मागुल्मवि' ग. पाठः. १०. 'णं च तथा वदेत् ।' क. पाठः.

औषधं च परीक्षाणां कृमिपुष्पादिभेदतः ।
कुमारकन्यकापादजातानां चैव सर्वशः ॥ १७ ॥
सर्वाञ्जनं च कथ्यन्ते खननग्रहणं तथा ।
निधिरक्षाविभेदं च तद्विरोधफलं तथा ॥ १८ ॥
एवमादीनि चान्यानि शृणुध्वं मुनिसत्तमाः[1] ।
अतःपरं प्रवक्ष्यामि सहायानां च लक्षणम् ॥ १९ ॥
सहायाः शोभनाः कार्याः सप्त पञ्च त्रयोऽथवा ।
वित्ताधिकं यथा तत् तु सहायानां समासतः ॥ २० ॥
नासहायेन कर्तव्यं मन्त्रिणां निधिसाधनम् ।
तत्रापि लक्षणं वक्ष्ये सहायानां समासतः ॥ २१ ॥
ग्राह्याग्राह्यविभेदेन[2] श्रीमच्छङ्करभाषितम् ।
सर्वसत्त्वहिताः शान्ता मदमात्सर्यवर्जिताः ॥ २२ ॥
धार्मिकाः शीलसम्पन्ना हिंसाडम्भविवर्जिताः[3] ।
बलवन्तः सदाचारा ब्राह्मणाः क्षत्रिया विशः ॥ २३ ॥
शूद्रा अपि सदाचारा मद्यमांसविवर्जिताः ।
सहायाः शोभना ह्येते[4] कथ्यन्ते येऽप्यनिन्दिताः ॥ २४ ॥
सत्त्वहीना दुराचारा नास्तिकाः साधुदूषकाः ।
देवद्विजगुरुस्त्रीणां निन्दितानृतवाचकाः ॥ २५ ॥
मूकं हीनं शस्त्रपाणिं वक्रात्मानं च वर्जयेत् ।
सुनिमित्तान्यथो वक्ष्ये येषु लाभो भवेन्निधेः ॥ २६ ॥
गौः सवत्सा सुरा मांसं[6] रोचना दधि चन्दनम् ।
पूर्ववस्त्रज्वलद्वह्निर्ऋषभाः पांशसंयुताः ॥ २७ ॥

---

१. 'ऋषिस', २. 'दं च एतच्छबर', ३. 'कुलीना विभवान्विताः।', ४. 'ये', ५. 'त्व', ६. 'समोदनं द', ७. 'मेघशब्दभाः ॥ स्व' ग. पाठः,

स्वस्तिकं वर्धमानेषु सालङ्कारा वराङ्गनाः ।
शुक्लवस्त्राणि पुष्पाणि पल्लवं दुग्धसर्पिषी ॥ २८ ॥
कुमारो गोमयं राजा गजौ[1]श्वध्वजचामराः ।
वेणुवीणामृदङ्गानां शब्दो वा दर्शनं[2] शुभम् ॥ २९ ॥
चकोरश्वै[3]कभृङ्जीवाचक्रवाकसुरौ[4]रिकाः ।
मयूरचातकादीनां शब्दो नूपुरशिञ्जितम् ॥ ३० ॥
पुष्पमूलफलं[5] पूज्या[6] र(क्ता ? त्ना)द्याभरणानि च ।
पूर्णकुम्भो[7]त्तमा नारी सपुत्रा[8] च सभर्तृका ॥ ३१ ॥
शु[9]भं दर्शनमित्यादि गच्छतां लाभसूचकम् ।
मुण्डकास्तैलिका नग्नाः कृशाङ्गाः क्षतपाणयः ॥ ३२ ॥
शशमार्जारकाकारिभुजङ्गा(वाँ[10]ग्मत्रीरुहाः ?) ।
व्याधिता दुःखिता भीता एतेषां दर्शनेऽशुभम् ॥ ३३ ॥
तिथिनक्षत्रवाराणां मुहूर्तं च यथोदितम् ।
हिताहितविभागेन कथ्यते निधिकर्मणि ॥ ३४ ॥
[11]सोमार्के निधिलाभः स्यादार्द्रायां नच लभ्यते ।
पुष्ये तृप्ते च विद्वांसो ! ध्रुवं सिद्धिः पुनर्वसौ ॥ ३५ ॥
आश्लेषायां भवेद् वस्तुविग्रहोऽप्यथ बन्धनम् ।
फल्गुन्यां धनलाभः स्यान्मखायां[12] मरणं ध्रुवम् ॥ ३६ ॥
चित्रायां कलहोद्वेग उत्तरा सिद्धिदा[13] स्मृता ।
विवादो जायते स्वात्यां विशाखा मृत्युदायिनी ॥ ३७ ॥

---

१. 'जोऽनड्वांश्च चामरः' क. पाठः. २. 'ने', ३. 'शुक्लगुञ्जी च', ४. 'दा', ५. 'ला' ग. पाठः. ६. 'जा', ७. 'म्भधरा ना', ८. 'त्रा सहभ', ९. 'सुहृद्दर्श', १०. 'द्वाभिरुरुहः', ११. 'सौम्ये नि', १२. धारण संज्ञितम्' क. पाठः. १३. 'द्धिकृन्मता' ग. पाठः.

अनूराधा वरा प्रोक्ता ज्येष्ठायां सिद्धिरुत्तमा ।
पूर्वाषाढे भवेदत्र मूले शोणितदर्शनम् ॥ ३८ ॥
धनिष्ठायां भवेत् क्लेशः श्रवणे सिद्धिरुत्तमा ।
पूर्वभाद्रपदे क्षेमो भरण्यां मरणं ध्रुवम् ॥ ३९ ॥
अश्विनी रेवती पुण्या कृत्तिका कार्यनाशिनी ।
रोहिण्यां सिद्धिरित्युक्तं नक्षत्रफलमेव च ॥ ४० ॥
क्रूरवारास्त्रयो वर्ज्या भौमार्क[१]शनिवासराः ।
व्यतीपाते त्र्यहं वर्ज्यं वैधृतौ च दिनत्रयम् ॥ ४१ ॥
दिनक्षये त्र्यहं वर्ज्यं दिनादौ प्रहरद्वयम् ।
आषाढे मित्रनक्षत्रे यावत् स्वपिति नो हरिः ॥ ४२ ॥
एतदन्तरमासाद्य खन्यं कुर्वीत[२] मन्त्रधीः ।
मार्गशीर्षे शुभे मासि नक्षत्रे चन्द्रदैवते ॥ ४३ ॥
खन्यं कुर्वीत सद्वारे यावदाषाढकं हितम् ।
न कुर्यात् परतः खन्यं यदि कुर्यादसिद्धिदम् ॥ ४४ ॥
उभे ते मैत्रनक्षत्रे अनूराधा विशेषतः ।
मृगशीर्षं[३] पुनश्चात्र प्रशस्तं खन्यकर्मणि ॥ ४५ ॥
शतसङ्ख्याधनं ग्राह्यं सहायत्रितयं शुभम् ।
तु[४]षस्तृष्णाभिहस्ता च जराजर्जरसन्धयः ॥ ४६ ॥
निषादा रक्तवस्त्राश्च काषायाम्बरधारिणः ।
लाक्षाङ्गारकधूमाग्नि[५]नियमस्थो नरोत्तमः ॥ ४७ ॥

---

१. 'दित्यशनैश्चराः', २. 'वित् । मा' ग. पाठः. ३. 'र्षपुरश्चन्द्रः प्र' क. पाठः. ४. 'शुभानूर्णनिहस्ता च सुराजनरसैन्धवम् । नि' ग. पाठः. ५. 'रकालो वायुना तथा । गुणवस्तु वयो ज्ञेय अजपञ्चश' क. पाठः.

द्विगुणस्तु वयो ज्ञेयो अष्टपञ्चशतेषु च ।
चत्वारिंशत्सहस्रेषु षोडशाद्विगुणा मताः ॥ ४८ ॥
कोटिवित्तं भवेद् यत्र सहायानां शतं च वै ।
कोट्यर्धं च तदर्धेन तदर्धे[2] द्विशतं तथा ॥ ४९ ॥
तदेतद् द्वित्रिचत्वारिपञ्चषट्सप्तधा मताः ।
सप्तविंशतिसङ्ख्यानि कोटिवित्ते यथामतम् ॥ ५० ॥
इति शाम्भव(सिद्धे)न निधिकर्म प्रकीर्तितम् ॥ ५०½ ॥

इति निधि[3]प्रदीपे प्रथमः परिच्छेदः ॥

---

अथ द्वितीयः परिच्छेदः ।

निधिस्थानानि कथ्यन्ते जलस्थलदिवस्तथा ।
नदीतटाककूपेषु वापीपुष्करणीषु च ॥ १ ॥
समुद्रस्थानमित्याहुः स्थलस्थं चोच्यतेऽधुना ।
विष्णुस्थाने शिवस्थाने मातृस्थाने तथैव च ॥ २ ॥
अन्येषु देवतास्थानेष्वथो ग्रामस्य मध्यमे ।
ग्रामसीमासु चान्यस्मिन् सीमास्थाने तथैव च ॥ ३ ॥
गृहे विप्रनृपाद्यानामन्येषां विभवान्विते ।
चत्वरे द्वारि पृष्ठे च तोरणे मण्डपे तथा ॥ ४ ॥
गजवाँजिगृहे चापि महावृक्षस्य मूलके ।
एकशीर्षेषु वृक्षेषु वनेषूच्चस्थलेषु च ॥ ५ ॥

---

१. 'स्तु सहो ज्ञे', २. 'द्वादशस्तथा', ३. 'धिकर्मप्रदीपिके प्र', ४. 'शालां वाजिशालां म' ग. पाठः.

नीचस्थाने श्मशाने च वने चोद्यानकेऽपिच ।
गोपालभवने गुह्ये सोपाने धान्यशालके ॥ ६ ॥
शून्यागारे खर्वटे च समे विषमभूमिषु ।
नदीसमुद्रयोगेषु प्राकाराणां च सं[1]न्धिषु ॥ ७ ॥
कोष्ठद्वारे गृहद्वारे स्रोतसां च तथैव च ।
आन्तरिक्षाणि कथ्यन्ते गिरिसानुगुहादिषु ॥ ८ ॥
प्रा[2]सादे गोपुरे चैव विमाने कु[3]ड्यकेषु च ।
एवमादीनि चान्यानि अन्तरिक्षगतं धनम् ॥ ९ ॥
ततः परं प्रवक्ष्यामि [4]जलस्थानस्य लक्षणम् ।
प्रावृट्काले प्रसन्ने च यत्र निष्कलुषं जलम् ॥ १० ॥
येषु स्थानेषु सर्वत्र तेषु विद्याद् धनं ध्रुवम् ।
यदुष्णं शीतकाले तु ग्रीष्मे यच्छीतलं जलम् ॥ ११ ॥
तस्मात् प्रतिकृतिं भित्त्वा तत्र विद्याद् धनं ध्रुवम् ।
धूम्रमुत्पलपत्रं तु यत्र पुष्पं प्रसूयते ॥ १२ ॥
जले तत्र ध्रुवं विद्यान्निधानमिति बुद्धिमान् ।
अतः परं प्रवक्ष्यामि भौ[5]मस्यापि च लक्षणम् ॥ १३ ॥
व्याप्ता भूमिरियं कृत्स्ना द्रव्येणापि यथा जलैः ।
तत्रादितो [6]हविष्यं स्यात् पुंसां [7]दुष्कर्मसञ्चये ॥ १४ ॥
[8]वर्हन्निधानं होमाय सोऽयं वै दर्शयन्ति हि (?) ।
स्थानानि विधिनान्यत्र निधीनां कल्पयन्ति च ॥ १५ ॥

---

१. 'सिद्धिषु', २. 'कारे गो', ३. 'गुह्यके', ४. 'निधिस्था', ५. 'मेयस्य च', ६. 'भविष्या स्या', ७. 'दुष्कृत्यस', ८. 'हं निधानं भोगोऽयं स्वयं वै' ग. पाठः.

यत्र धूमायते भूमिर्या च भूमिश्च निस्तृणा ।
यत्र विज्वलिता भूमिर्भौमोऽयमिति निर्दिशेत् ॥ १६ ॥
रात्रौ विज्वलिता भूमिर्दिवा नैव च दृश्यते ।
हर्षं वा जायते भूमौ भौमोऽयमिति निर्दिशेत् ॥ १७ ॥
यत्र पूर्वसुगन्धः स्यादाज्यधूमाकृतिश्च यः ।
वसन्तवनगन्धो वा भौमेयं तत्र निर्दिशेत् ॥ १८ ॥
वृक्षगुल्मलतादीनां लक्षणं तु विधीयते ।
अपुष्पाश्च सपुष्पाश्च अफलाः सफलाश्च ये ॥ १९ ॥
अकण्टकाश्च ये वृक्षा भौमेयं तत्र निर्दिशेत् ।
पुष्पोपरिष्टात् पुष्पं च भौमेयं तत्र निर्दिशेत् ॥ २० ॥
स्वभावाद् विपरीतैश्च पत्रपुष्पफलाङ्कुरैः ।
द्रुमाः पर्णप्रमाणैश्च भौमेयं तत्र निर्दिशेत् ॥ २१ ॥
स्वभावादपि वृक्षस्य स्रवन्तो रक्तबिन्दवः ।
विश्रुतः प्रतिशब्दश्च तत्र वित्तं विनिर्दिशेत् ॥ २२ ॥
द्रुमप्रमाणैरा वृक्षात् प्ररोहं यत्र मुञ्चति ।
प्ररोहे दृष्टमात्रे तु वसु विद्यादसंशयम् ॥ २३ ॥
एकाङ्गुलपरीणाहे प्ररोहे लभते धनम् ।
द्वात्रिंशा[2]दिति वा पृष्ठे पञ्चपञ्चाशतेऽपि वा ॥ २४ ॥
षष्ठ्यर्थैङ्गुपरीणाहे विद्यात् पञ्चशतं धनम् ।
षोडशाङ्गुलिके ज्ञेयं सहस्रं नात्र संशयः ॥ २५ ॥
विंशत्यङ्गुलिके विद्यात् सहस्राणि बहूनि च ।
त्रिंशदङ्गुलिके ज्ञेयं सहस्राणां शतं वसु ॥ ॥ २६ ॥

---

१. 'लताङ्कु', २. 'शदति वा पृष्ठौ प' ग. पाठः.

अतः परं प्रवक्ष्ये तु कोटिं[1] तत्र विनिर्दिशेत् ।
मृगपक्षिकृमीणां च लक्षणं तु विधीयते ॥ २७ ॥
अधोमुखोऽपि यस्तिष्ठेद् वृषो दृष्टश्चतुष्पथे ।
रमते गर्जते वापि तत्र वित्तं विनिर्दिशेत् ॥ २८ ॥
कृकलासाः शुनश्चैव गर्दभाश्चैव सूकराः ।
दृश्यन्ते यत्र क्रीडन्ति तत्र विद्यान्न संशयः ॥ २९ ॥
वराहोऽप्यथवा नित्यं ज्वलते च महीतले ।
तत्र वित्तं विजानीयान्महाकालवचो यथा ॥ ३० ॥
यत्र चेन्द्रधनुर्नित्यं वल्मीकेषु च तिष्ठति ।
न चेत् तु वर्षाकाले तु तत्र वित्तं विनिर्दिशेत् ॥ ३१ ॥
यत्र गत्वा सदाकालं शिवा रावं विमुञ्चति ।
अधोमुखं विलिखिते तत्र वित्तं विनिर्दिशेत् ॥ ३२ ॥
पक्षिणां लक्षणं चैव विधानं शृणु साम्प्रतम् ।
[2]श्येनाः काका बकाः श्वीना अन्येषां बहुपक्षिणाम् ॥ ३३ ॥
सततं यत्र तिष्ठन्ति निधिस्तत्र न संशयः ।
यत्र गत्वा सदाकालं रमते सेवते[3] द्विजः ॥ ३४ ॥
खनते[4] चैव पादेन तत्र विद्यान्महानिधिम् ।
गृध्रो वल्मीकमारुह्य पादेनैकेन तिष्ठति ॥ ३५ ॥
खनते वान्यपादेन तत्र वित्तं विनिर्दिशेत् ।
कृमिकीटादिभेदानां लक्षणं तु विधीयते ॥ ३६ ॥
पाण्डुश्वेतसिताद्युक्तं हेमपीतोऽरुणो भवेत् ।
कर्तारुणं तथा ताम्रं[5] कृष्णा[6] श्यामं च नीलता ॥ ३७ ॥

---

१. 'टिवित्तं वि', २. 'शौनकाश्च बकाङ्घ्रीका अ', ३. 'ते सदा ॥', ४. 'ने', ५. 'म्रा' ६. 'ष्ण' ग. पाठः.

अन्योन्यं शत्रवो यत्र कृमिकीटसरीसृपाः ।
क्रीडन्ति सहिता यत्र भौमेयं[1] तत्र निर्दिशेत् ॥ ३८ ॥
अन्येषां चैव भौमानां लक्षणं तु विधीयते ।
चतुरश्रं त्रिकोणं वा भूतलं[2] यत्र दृश्यते ॥ ३९ ॥
तत्र कस्तूरिका नाम निधिर्दैवविनिर्मिता ।
भिन्नमस्तकसङ्काशः प्ररोहो[3] दृश्यते वटे[4] ॥ ४० ॥
तस्याधः संस्थितं द्रव्यं जानीयादुक्तलक्षणम् ।
स्थलजाश्च जले वृक्षा जलजाः स्थलभूमिषु ॥ ४१ ॥
अक्षीराः[5] क्षीरवृक्षाश्च सक्षीराः क्षीरवर्जिताः ।
विपरीतफलोद्भेदा दृश्यन्ते यत्र भूरुहाः ॥ ४२ ॥
अवश्यं तत्र वित्तं स्यात् साधयेद् विधिना बुधः[6] ।
करिहस्तसमाकारः प्ररोहो दृश्यते व(देत्?टे) ॥ ४३ ॥
रक्तं स्रवति भिन्ने च तत्र वित्तं न संशयः ।
कूर्माकृतिप्ररोहः स्यात् सहस्रं शिवचोदितम् ॥ ४४ ॥
अव्यक्तकलशाकारे गोधाकारप्रकारके ।
पद्मपुष्पे शुभे शुक्ले तदधोनिधि निर्दिशेत् ॥ ४५ ॥
ध्वजमीनसमाकारः प्ररोहो दृश्यते व(देत्?टे) ।
शतसाहस्रकं वित्तं तदधो लभ्यते ध्रुवम् ॥ ४६ ॥
ग्रीष्मे सूर्यांशुभिर्दग्धा शोषं नायाति या मही ।
दावानलेन दग्धा वा तोयसम्पर्कवर्जिता ॥ ४७ ॥

---

१. 'यं नात्र संशयः ॥', २. 'प्रभूतं य', ३. 'प्रदरो दृ', ४. 'देत् ॥', ५. 'क्षीरिणां भूत्वा स' ग. पाठः. ६. 'धः । जीर्णोद्यान' क. ग. पाठः.

प्रदेशे कुत्रचित् तत् स्यात् पतङ्गैः सेवितो यदि ।
कोमलः शाड्वलो रम्यो दृश्यते पांसुसञ्चयः ॥ ४८ ॥
गोकुलैर्बहुभिः स्निग्धैः खाद्यमानोऽपि नित्यशः ।
पुनश्च तादृशो भूयान्निधानं तत्र लक्षयेत् ॥ ४९ ॥
अनारोहेषु वृक्षेषु यद्यारोहः प्रदृश्यते ।
निधानं लक्षयेत् तत्र लभ्यं भाग्यवतां नृणाम् ॥ ५० ॥
बहूनां यत्र वृक्षाणामेक एव तरौ खगाः ।
वसन्ति सकलं कालं निधानं तत्र लक्षयेत् ॥ ५१ ॥
जीर्णोद्यानतटाकेषु शून्यग्रामवनेषु च ।
मातरो यत्र तिष्ठन्ति निधिस्तत्र न संशयः ॥ ५२ ॥
गोधू+++मै+र्य निखनेच्छङ्कितस्थले ।
सप्तरात्रे व्यतिक्रान्ते यदि जीर्यन्ति तेषु ते ॥ ५३ ॥
तथा तत्र धनं ज्ञेयं कुलिशेन च भाषितम् ।
अधोमुखेषु वृक्षेषु प्रान्ते तत्र धनं भ[1]वेत् ॥ ५४ ॥
सोदके प्रावृषः काले तृणं यत्र न जायते ।
दृश्यते शाड्वलं ग्रीष्मे तत्र वित्तं विनिर्दिशेत् ॥ ५५ ॥
ज्वालां वै वर्षकाले तु[2] प्रसूयेत वसुन्धरा ।
[3]अपत्राः पत्रिणश्चैव सपत्राः पत्रवर्जिताः ॥ ५६ ॥
अत्युष्णाः शीतकाले तु तत्र विद्यान्निधिं स्थितम् ।
उष्णे षष्टिसहस्राणि अशीतिर्धूमदर्शने ॥ ५७ ॥

---

१. 'वदेत्', २. 'तु', ३. 'शरद्धेमन्तवर्षासु स' न. पाठः.

कोटिस्तु ज्वलिते ज्ञेयमित्याह भगवाञ्छिवः ।
श्वेता रक्ता च पीता च गोधा चैव तु मूषिका ॥ ५८ ॥
चित्तिर्वा[१] स्वपते यत्र तत्र वित्तं विनिर्दिशेत् ।
एकत्र सर्पनकुलौ रमेते वसतौ[२] यदि ॥ ५९ ॥
तत्र वित्तं विजानीयान्महाकालवचो यथा ।
यत्र यत्र च सन्दृष्टो यक्षो वा राक्षसोऽपि वा ॥ ६० ॥
तत्र वित्तं विजानीयान्महाकालवचो यथा ।
गिरिगह्वरदेशे तु प्रतिशब्दं विमुञ्चति ॥ ६१ ॥
गृहगह्वरदेशे[३] वा तत्र वित्तं विनिर्दिशेत् ।
चतुष्पथे कृते वृक्षे वल्मीको यदि मुञ्चति ॥ ६२ ॥
विवर्णफलपुष्पं वा तत्र वित्तं विनिर्दिशेत् ।
धूमायते यथा वृक्ष ऊष्माणं च तथा ध्रुवम् ॥ ६३ ॥
प्रतिशब्दं विमुञ्चेत धनं तत्र शिवोऽब्रवीत् ।
वल्ली गृहप्रदेशे तु रात्रौ प्रज्वलिता यदि ॥ ६४ ॥
क्षते तु स्रवते क्षीरं तत्र वित्तं विनिर्दिशेत् ।
अर्चितस्य तु लिङ्गस्य विपरीतं तु दृश्यते ॥ ६५ ॥
पत्रं पुष्पं फलं वापि निधिं तत्रेश्वरोऽब्रवीत् ।
क्रमुकं नालिकेरं वा तालं खर्जूरमेव वा ॥ ६६ ॥
द्विशिरास्त्रिशिरा वापि तत्र वित्तं विनिर्दिशेत् ।
श्मशाने यत्र दृश्यन्ते बुद्धस्य प्रतिमा यदि ॥ ६७ ॥
निर्जलं पङ्कजं वापि तत्र वित्तं विनिर्दिशेत् ।
वृक्षगुल्मलतालक्ष्मीर्जलजाः स्थलजा अपि ॥ ६८ ॥

१. 'च्छि'. २. 'सेवते स', ३. 'ग्रहगह्वरगेहे वा' ग. पाठः.

प्रकृतेर्विकृतं प्राप्ते तत्र वित्तं न संशयः ।
लिखिता यत्र पाषाणे दृष्टा येऽन्योन्यशत्रवः ॥ ६९ ॥
तस्मिन् परीक्षयेद् धीमान् शिलापट्टे तु निर्दिशेत् ।
पञ्चसप्तशिरस्का वा त्रिशिरस्काश्च पन्नगाः ॥ ७० ॥
पाषाणे लिखिता यत्र एकान्तं भौमलक्षणम् ।
लक्षणं भूमिजं भौमं मया प्रोक्तं समासतः ॥ ७१ ॥
अन्तरिक्षस्थभौमानां लक्षणं साम्प्रतं शृणु ।
नवाकृतियुता[1] यत्र प्रतिमा यत्र तिष्ठति ॥ ७२ ॥
मुखवाग + रे वापि तत्र वित्तं विनिर्दिशेत् ।
नाभौ तु नाभिमात्रं तु स्तने तु स्तनमादिशेत् ॥ ७३ ॥
कपोले कर्णदेशे तु कर्णमात्रं तु तद् भवेत् ।
अन्योन्यदर्शने वापि प्रतिमासु परस्परम् ॥ ७४ ॥
तत्र वित्तं विजानीयान्महाकालवचो यथा ।
प्रतिमादेवता यत्र प्रतिमा यत्र तिष्ठति ॥ ७५ ॥
मुखेवर्जे[2]जले वापि तत्र वित्तं विनिर्दिशेत् ।
प्रतिमा देवता(का? गा)रे प्रतिशब्दं विमुञ्चति ॥ ७६ ॥
मुखे तु तिष्ठते वित्तं महाकालवचो यथा ।
विहारे प्रतिमा यत्र यत्र रूपं सुशोभनम् ॥ ७७ ॥
अनिन्दितं हि विद्येत[3] धनं तत्र विनिर्दिशेत् ।
विनायकस्य प्रतिमा स्थापिता चोत्तरामुखम् ॥ ७८ ॥
कुम्भमस्तकमध्यान्ते तत्र वित्तं विनिर्दिशेत् ।
प्रस्तरोहे प्ररोहे वा निधिं तत्र विनिर्दिशेत् ॥ ७९ ॥

---

१. 'तिर्यगायत्रिन', २. 'जे', ३. 'दृश्येत' ग. पाठः.

आत्मानं प्रतिमा यत्र परस्मै[1] दर्शयेद् यदि ।
अङ्गुल्यग्रेण वा सम्यक् पतते वा यथाक्रमम् ॥ ८० ॥
एतत्स्थानमतो नीतासंशयं निर्भयं धनम् ।
यस्माद् बिलेशयाः केचित् संहिता नगरादिषु ॥ ८१ ॥
क्रीडन्ति प्रतिमा[2] यत्र निधानं तद्गतं विदुः ।
क्रीडन्ति बाहवो यस्य दर्शने च सकृत् सकृत् ॥ ८२ ॥
महोदरा या प्रतिमा निधानं तद्गतं विदुः ।
बिलेशया द्वि[3]पुच्छास्तु तत्र चास्ति ध्रुवं धनम् ॥ ८३ ॥
यावत्ससहितो यत्र शैल[4]तद् दृश्यते यदि ।
बहु चैकस्थितं वापि तदन्तर्गतमामिषम्[5] ॥ ८४ ॥
ऊर्ध्ववक्राप्यधोदृष्टिरेकस्थाधिकरोदिनी ।
जलं स्रवति वा यत्र तत्र वित्तं विनिर्दिशेत् ॥ ८५ ॥
अश्रुपूर्णमुखी दे[6]वमातृका यत्र दृश्यते ।
निधानं तत्र विज्ञेयं शीघ्रसाध्यं न संशयः ॥ ८६ ॥
एकैव प्रतिमा यत्र माता भवति त[7]त्तले ।
तत्र वित्तं विजानीयान्मन्त्रविघ्नविवर्जितम् ॥ ८७ ॥
विकृतप्रतिमा यत्र सप्ताश्वं पद्मपाणिका ।
तस्याः पा[8]दतले विद्यात् कोटिसङ्ख्यधनं बृहत् ॥ ८८ ॥
एकनेत्रा भवेद् यत्र देवी मातापराजिता ।
तत्र पञ्चसहस्राणि साधयेद् बलिदा[9]नतः ॥ ८९ ॥

---

१. 'मं' क. ग. पाठः. २. 'मायां तु नि', ३. 'हि', ४. 'शैलद दृश्यते ।' ग. पाठः. ५. 'षु', ६. 'वी' क. ग. पाठः. ७. 'तत्र चेत् । स्थितं वि' ग. पाठः. ८. 'णि' क. पाठः. ९. 'ता ततः' ग. पाठः.

ऊर्ध्ववक्त्रा[1] भवेद् यत्र देवी तत्र धनं तयोः।
मातृमण्डलमध्यस्थं यत्रान्यद् रूपकं भवेत् ॥ ९० ॥
सहस्रैकं मतं वित्तमुद्धरेद् विघ्नवर्जितम्।
ध्वजं मीनसमाकारः लम्बयद् यत्र दृश्यते ॥ ९१ ॥
घटस्थं तत्र जानीयाद् वित्तमीश्वरभाषितम्।
मुसलोलूखलाकारः प्ररोहो यत्र दृश्यते ॥ ९२ ॥
दशसाहस्रकं वित्तं तदधो लभ्यते ध्रुवम्।
कुम्भीले[2]मकरे कोष्ठमवगच्छ वृषाकृति ॥ ९३ ॥
खर्जूरफलसङ्काशा तथा तालफलोपमा।
वी[3]हमिश्रफलाकारै[4]र्जम्बूकफलसन्निभैः ॥ ९४ ॥
माषाकृतिः प्ररोहः स्यात् तदधः सं[5]स्थितो निधिः।
भौमानामन्तरिक्षे तु लक्षणं समुदाहृतम् ॥ ९५ ॥
हेमवर्णगता ज्वाला छत्राकारेण दृश्यते।
निधिर्ज्वालागले ज्ञेयः साधयेत् तं विधानतः ॥ ९६ ॥
ज्वालामात्रं हिरण्याभं यत्र स्यात् तत्र निश्चितम्।
सहस्रद्वितयं विद्वानादिशेदविचारतः ॥ ९७ ॥
हेमाभा छत्ररूपेण यत्र ज्वाला भवेद् भुवि।
पुरुषस्य प्रमाणेन तत्र वित्तं न संशयः ॥ ९८ ॥
यत्र व्यक्ता भवेज्ज्वाला विविधा तत्र लक्षयेत्।
कोट्यर्धं रत्नसंमिश्रं वित्तं विद्यान्न संशयः ॥ ९९ ॥
प्रदिशेन्निधिमानीय पर्वते[6] वा तिरोहिते।
धूम्राभा कृष्णवर्णाभा ज्वाला सूक्ष्मा तटित्प्रभा ॥ १०० ॥

---

१. 'त्त', २. 'लं कमरक्ताष्ठाम', ३. 'स', ४. 'रैः करजस', ५. 'सु', ६. 'ते' ग. पाठः.

अतसीपुष्पसङ्काशा सिन्दूरसदृशापि वा ।
नवज्वाला तु सा ज्ञेया वर्जनीयातिदूरतः ॥ १०१ ॥

नक्रमण्डूकनकुलकूर्माकारास्थिभस्मनाम् ।
वल्मीतरुपुलेऽखानि यत्र तत्र तथा निधिः ॥ १०२ ॥

निर्णयेन शिलोत्पन्ना मुसली[2] स्थूलमूर्ध्वजा[3] ।
ऊर्ध्वसीमाथवा यत्र दृश्यते प्रतिमा क्वचित् ॥ १०३ ॥

षट्सहस्राणि तत्कुक्षौ सञ्चितानेन उच्यते ।
रेणुका नार्दि[4]का चण्डा चण्डोत्पलसमन्विता ॥ १०४ ॥

पिष्ट्वा तर्केण तत्कुक्षितल्लेपात्तत्र भेदकः ।
यत्र दृष्टिर्भवेल्लीना प्रतिमायां विनिर्दिशेत् ॥ १०५ ॥

निधानं तत्र घोरेण बलिनान्नेन साधयेत् ।
शिरःकीलसमायुक्तं प्रतिमायां भवेत् क्वचित् ॥ १०६ ॥

तस्याः शिरसि जानीयात् पूर्वयोगेन चोद्धरेत् ।
एकाङ्गा व्यङ्गता सा चेत् तस्याः पादगतं धनम् ॥१०७॥

छत्रं प्रदृश्यते यत्र विकृतं यस्य कस्यचित् ।
तत्तले संस्थितं वित्तं जानीयादविचारतः ॥ १०८ ॥

बिन्दुयुक्ता[6] प्रशोणा च प्रतिमा संस्थिता भवेत् ।
तत्कुक्षिसंस्थितं वित्तमवश्यं शबरोऽब्रवीत् ॥ १०९ ॥

स्वबाहुमीक्षमाणा तु[7] प्रतिमा यत्र दृश्यते ।
तस्या बाहुगतं वित्तं सहस्रैकं न संशयः ॥ ११० ॥

---

१. 'ताम्', २. 'ल', ३. 'जाः', ४. 'दि', ५. 'मा वापि नि', ६. 'क्तं प्रणाशं च', ७. 'वा' ग. पाठः.

त्रिशूलं पट्टिसं[1] वापि यस्या उरसि दृश्यते ।
तत्कुक्षिसंस्थितं वित्तं शतद्वयमुदाहृतम् ॥ १११ ॥
दर्दुरो[2] मस्तके यस्याः[3] प्रतिमायाः[4] प्रदृश्यते ।
शतानि पञ्च वित्तस्य[5] तत्र स्थाने शिवोदितम् ॥ ११२ ॥
एकोन्नतं भवेद् यत्र प्रतिमा चारुहासिनी[7] ।
तस्याः[6] स्तनगतं वित्तं विघ्नं न स्याच्छतद्वयम् ॥ ११३ ॥
शिरोद्वयं भवेद् यस्य तस्य मस्तकसंस्थितम् ।
सहस्रैकं धनं विद्धि तद् दृष्टं तत् प्रसाधयेत् ॥ ११४ ॥
काणा कुब्जा भवेत् तस्याः काणाया लोचने शतम् ।
कुब्जापादतले वित्तं ग्राह्यं मन्त्रौषधे विना ॥ ११५ ॥
पाशहस्ता नराकारा प्रतिमा यत्र दृश्यते ।
तत्र पञ्च सहस्राणि साधयेद् विघ्नवर्जितम् ॥ ११६ ॥
नाभिहीनं च यद् रूपं दृश्यते नाभिदेशतः ।
निर्विघ्नं वित्तमुद्दिष्टं बलिमन्त्रविवर्जितम् ॥ ११७ ॥
पादमाक्रम्य पादेन जङ्घिका[8] चाथ जङ्घयोः ।
शतानि पञ्च तिष्ठन्ति शङ्खपद्मे[9] न संशयः ॥ ११८ ॥
निगलं बध्यते दृष्ट्वा स्त्रियो वा[10] पुरुषोऽथवा[11] ।
प्रतिमा कोटिसङ्ख्याकं धनं तत्र विनिर्दिशेत् ॥ ११९ ॥
कुञ्चितौ चरणौ यस्य प्रतिमा यत्र दृश्यते ।
सहस्रपञ्चकं तस्य पादाधस्तिष्ठति ध्रुवम् ॥ १२० ॥

---

१. 'द्विशं वा' क. पाठः. २. 'तदुरो, ३. 'स्य', ४. 'यां', ५. वेद्यानि त' ग. पाठः. ६. 'यः स्वापत्तौ शतं वित्तं विघ्नं यस्या शत', ७. 'त' ग. पाठः. ८. 'जङ्घाया चाथ जाङ्घिका ।' क. पाठः. ९. जङ्घापद्मे न', १०, ११. 'पि' ग. पाठः.

श्मशाने यदिवा रथ्ये बालवृक्षे चतुष्पथे ।
अलिङ्गप्रतिमाः सत्त्वं स्थितेंऽशं तद्गतं धनम्? ॥ १२१ ॥
ऊर्ध्वबाहुरतिक्रूरा प्रतिमा यत्र दृश्यते ।
अनिर्दिष्टं भवेद् वित्तमविघ्नं तत्तले स्थितम् ॥ १२२ ॥
अजस्य प्रतिमा यत्र खड्गहस्ता प्रदृश्यते ।
तस्याः स्कन्धे स्थितं द्रव्यं सहस्रं विघ्नवर्जितम् ॥ १२३ ॥
ऊर्ध्वकेशा भवेद् यत्र गणेशप्रातिमा यदि ।
सहस्रपञ्चकं तस्याः शिरोधो निर्दिशेद् बुधः ॥ १२४ ॥
अजरूपा त्रि[1]नेत्रस्य प्रतिमा यत्र दृश्यते ।
चत्वारिंशत्सहस्राणि तत्तले फलमादिशेत् ॥ १२५ ॥
प्रासादे प्रतिमा यत्र जल्पति श्रूयते यदि ।
निधानं तत्र विज्ञेयं बलिमन्त्रेण साधयेत् ॥ १२६ ॥
त्रिपादप्रतिमा यत्र चक्रहस्ता प्रदृश्यते ।
हस्तमात्रोदये वित्तं निर्विघ्नं साधयेद् बुधः ॥ १२७ ॥
एकपादा भवेद् यत्र प्रतिमा दृश्यते वदेत् ।
सहस्रं तत्र निर्दिष्टं जपात् स्पृष्टावशीर्यते ॥ १२८ ॥
नागस्य प्रतिमा यत्र दृश्यते नरवाहना ।
अफणा सर्पशीर्षा वा निधिं तत्र समादिशेत् ॥ १२९ ॥

इति निधिप्रदीपे शिलादिप्रतिमालक्षणे
द्वितीयः परिच्छेदः ॥

---

१. 'द्वि' ग. पाठः.

## अथ तृतीयः परिच्छेदः ।

परीक्षालक्षणं वक्ष्ये कृमिपुष्पौषधादयः ।
परीक्षया विना यत्र न्यासस्थानं न दृश्यते ॥ १ ॥

परीक्षाया विधानेन भौमेयं कर्तुमर्ह[1]थ ।
ऋषयो वाञ्छिता[2]ः सन्ति सहायाश्चात्र नासहाः ॥ २ ॥

वृथा श्रमो भवेदेषा तत्परीक्षा न कारयेत् ।
सुपरीक्षा तु कर्तव्या सम्यक् तु फलमिच्छता ॥ ३ ॥

प्ररोहप्रतिमायाश्चेत् परीक्षा यत्र दृश्यते ।
प्ररोहमात्रे दृष्टे तु निस्सन्देहः परीक्ष[3]येत् ॥ ४ ॥

भौमेयं सुपरीक्ष्यं तु संशयच्छेदनाय तु ।
प्रशस्तेऽहानि नक्षत्रे सौम्ये संवत्सरे गुणे ॥ ५ ॥

मातृग्राहाः कर्कटश्च बहवो यत्र सं[4]ङ्गिनः ।
यस्मिन् सम्पिण्डिताः सर्वे तत्राप्येव न संशयः ॥ ६ ॥

निधिं तत्र विजानीयान्नात्र कार्या विचारणा ।
आत्मनां तु विपक्षास्तु[5] मल्लिका दधिलेपिताः ॥ ७ ॥

अधोमुखाः प्रतिष्ठाप्य सन्ध्यायां पञ्च सप्त वा ।
मन्त्रेणानेन संस्पृश्य स्थाप्यन्ते मल्लिकास्तदा ॥ ८ ॥

वसु यद्यस्ति त[6]त्रस्थं दधिवर्णं विमुञ्चति ।
पीतं वा रक्तकृष्णं वा अन्यद्वात्र भवेद् यदि ॥ ९ ॥

---

१. 'सि', २. 'तान् हन्ति', ३. 'णम् ॥' ग. पाठः. ४. 'संस्थिताः ।' क. पाठः. ५. 'तु', ६. 'तत तत्र द' ग. पाठः.

ततो निस्संशयो भूत्वा तत्र तन्मल्लिका भवेत् ।
तत्रारम्भं ततः कुर्यात् तद् दृष्ट्वोपस्थिता जनाः ॥ १० ॥
कार्पासास्थिमयान् मूलान् गोमूत्रेण प्रलेपयेत् ।
आमं शरावं सन्दीप्य दत्त्वा भूमौ निधापयेत् ॥ ११ ॥
प्रभाते यदि सम्पश्येदग्निदग्धसमप्रभम् ।
व्यक्तं तत्र विजानीयात् कर्म तत्र समारभेत् ॥ १२ ॥
शिखिपित्तं द्वे हरिद्रे मरिचोदुम्बरं तथा ।
कार्पासास्थितुषाश्चैव समभागं विलेपयेत् ॥ १३ ॥
शिरःकण्ठकपालाना प्रलेपोऽयं विवर्णकः ।
निधिं तत्र विजानीयाद् विशेषेणोपलक्षितः ॥ १४ ॥
हरिद्राकल्कसंस्पृष्टं क्षीरं भूमौ निषेचयेत् ।
प्रभाते भस्मसङ्काशा भूमिः स्यात् तत्र निश्चितम् ॥ १५ ॥
पद्मपत्राणि चालोक्य शङ्कास्थाने निधापयेत् ।
यस्यैरण्डस्य पत्राणि पूर्णानि निशितानि च ॥ १६ ॥
श्वेता भूमिर्यथान्यानि लक्षणेन च लक्षयेत् ।
गन्धपाषाणभागेन हरितालं मनश्शिला ॥ १७ ॥
तच्चूर्णं पद्मपत्रेण वार्त्तिकां पूजयेद् बुधः ।
औदुम्बरफलं गृह्य सुरया सह पेषयेत् ॥ १८ ॥
स्वभावाद् विपरीतश्चेत् तत्र वित्तं विनिर्दिशेत्* ।
शालिपिष्टमयीं वर्तिं तैलमिश्रां विचक्षणः ॥ १९ ॥
सुरया सह सम्मिश्रं शङ्कास्थाने निधापयेत् ।
रात्रौ वाऽस्तमिते काले दीपवत् सम्प्रकाशते ॥ २० ॥

---

* इत परं श्लोकत्रयं ग-पुस्तके न दृश्यते ।

भौमं तत्र विजानीयाद् भगवानीश्वरोऽब्रवीत् ।
स्थाप्य नीवारपिष्टं तु दधिमिश्रं विचक्षणः ॥ २१ ॥
स्वभावाद् विपरीतश्चेत् तत्र वित्तं विनिर्दिशेत् ।
जातीमुकुलकं वापि कदम्बमुकुलोऽथवा ॥ २२ ॥
सुरायाः क्षीरसम्पृक्तो परीक्षां तत्र कारयेत् ।
पायसं तैलसम्मिश्रं स्थापयेद् रविवासरे ॥ २३ ॥
धनं तत्र विजानीयाद् विवर्णं तु यदा भवेत् ।
जम्बूकल्वककषाये तु तिलतैलं विभावयेत् ॥ २४ ॥
दधिम(धे ? न्थ) समायुक्तं विपरीतं धनं भवेत् ।
प्रातःकाले तु विप्रेन्द्राः ! परीक्षा कथिता मया ॥ २५ ॥
सर्षपं तिलपिष्टं तु सुरया सह पेषयेत् ।
स्वभावाद् विपरीतश्चेत् तत्र वित्तं विनिर्दिशेत् ॥ २६ ॥
सर्पनिर्मोचनं ग्राह्यं हरितालं मनश्शिला ।
गन्धपाषाणचूर्णेन क्षौद्रेण सह पेषयेत् ॥ २७ ॥
उपवासी शुचिर्भूत्वा काले वर्तिं प्रदापयेत् ।
गोधूमैर्घटमापूर्य निखनेच्छाङ्कितस्थले ॥ २८ ॥
गोक्षीरेणाभिसम्पेष्य राजिकान् कोद्रवांस्तिलान् ।
शणबीजानि मृत्स्थाने शङ्किते तैर्निषेचयेत् ॥ २९ ॥
सुदर्शनसमायुक्तं नृहरिं तत्र पूजयेत् ।
तस्मिन् हेमप्रभे दृष्टे प्रभाते निधिमादिशेत् ॥ ३० ॥
अर्जुनस्य कदम्बस्य लोध्रस्य खदिरस्य च ।
ब्रह्मवृक्षस्य पत्राणि काञ्जिकेनातिपेषयेत् ॥ ३१ ॥

---

१. 'बिसकामुकुलेन वा', २. 'भ', ३. धवलस्य' ग. पाठः.

निशायां लेपयेत् तेन भूमिके मन्त्रावित् ततः ।
प्रभाते दृश्यते भूमिरतत्र वित्तं विनिर्दिशेत् ॥ ३२ ॥

कुङ्कुमस्य करञ्जस्य नालिकेरस्य पल्लवान् ।
शुण्ठ्याश्च[1] काञ्चिकेनाथ पिष्ट्वा भूमिं प्रलेपयेत् ॥ ३३ ॥

प्रभाते दृश्यते भूमिस्तत्र वित्तं विनिर्दिशेत् ।
बिल्वं कदम्बमादाय काञ्चिकेनाथ पेषयेत् ॥ ३४ ॥

प्रदेश लेपयेत् तेन विवर्णं धनमादिशेत् ।
सिंहपादाङ्कितं पट्टं प्रलेपाद् यत्र दृश्यते ॥ ३५ ॥

सिंहिकाव्याघ्रपादाश्च तत्र वित्तं[2] न संशयः ।
मुखे मुखे[3] सहस्राणि ज्ञातव्यानि चतुर्दश ॥ ३६ ॥

अतसीपुष्पसङ्कल्के लिप्तमात्रे विशीर्यते ।
नक्रमण्डूकयोर्मेदोयुक्तास्तक्रेण लेपिताः ॥ ३७ ॥

शिलाः स्फुटन्ति मन्त्रेण पुण्डरीकेण मन्त्रिणा ।
अनेन मनुना ग्राह्य निधानं मन्त्रिणा सदा ॥ ३८ ॥

दारुसङ्घट्टपट्टानां शिलानां च विभेदतः ।
विघ्नशान्तिश्च कर्तव्या पुण्डरीकेण मन्त्रिणा ॥ ३९ ॥

कृष्णायां तु चतुर्दश्यां तत्र नारायणं स्मरन् ।
मनुना ग्राह्यकं देवं निदानं मन्त्रिणा सह ॥ ४० ॥

दारुसङ्घट्टपट्टानां शिलानां च विभेदतः ।
विघ्नशान्तिश्च कर्तव्या पुण्डरीकेण मान्त्रिणा ॥ ४१ ॥

---

१. 'गुण्ड्याश्च', २. 'त्तं विनिर्दिशेत् ॥', ३. 'ख' ग. पाठः.

कृष्णायां तु चतुर्दश्यामहोरात्रोषितो नरः ।
नीलोत्पलैर्महेशानं पूजयेत् स शुचिर्भवेत् ॥ ४२ ॥

मन्त्रा[1]युतं जपो[2] होमं द[3]शांशेन विधीयते ।
तिलैर्गव्याज्यसं[4]युक्तस्तत्रं[5] सिद्धो भवेन्मनुः ॥ ४३ ॥

पञ्चहस्तो यदा पट्टो दृश्यते यत्र कुत्रचित् ।
हरिताङ्गारवर्णाभा त्रिशूलं[6] वृषभाकृतिः ॥ ४४ ॥

सहस्राणां च पञ्चाशद् वित्तं कोणेषु संस्थितम् ।
लिप्ता[7]ङ्ककमथासीनः पुण्डरीकेण जापिना ॥ ४५ ॥

सफला जायते शीघ्रं निधिर्वज्रहता यथा ।
तत्र वातायने देवीं शिखरं योजयेद् बुधः ॥ ४६ ॥

अष्ट[8]हस्ता यदा पट्टा कोकाकारा मनोहरा ।
जालिनी ब्रह्मदण्डा च निर्यासं कमलोद्भवः ॥ ४७ ॥

[9]एभिर्विलिखितः पट्टो रङ्गिणां मन्त्रयोगतः ।
शीर्यते योगतो वज्रसाधितः पर्वतो यथा ॥ ४८ ॥

धुर्धूरैः कल्कहं देहलशुनं सुरदारु च ।
विलङ्कं हस्तिमूत्रेण पिष्ट्वा मन्त्री विलेपितः ॥ ४९ ॥

द्विधा सञ्जायते पट्टं ब्रह्मशापहतो यथा ।
उद्धृते मालिनीमन्त्रं सर्वपट्टां[10]त्रिभेदनम् ॥ ५० ॥

---

१. 'न्त्रयुक्तं', क. पाठः. २. 'पेद्धोमं', ३. 'सहस्रं तु वि', ४. 'संमिश्रैरत', ५. 'तः', ६. 'ल', ७. 'सगन्धकमासी' ग. पाठः. ८. 'हस्तादादाय पट्टा तु कककारा' क. ख. पाठः. ९. 'षु हल्लेपिका पट्टे र', १०. 'ट्ट' ग. पाठः.

कृष्णे श्वेताधिवः पट्टो रेखान्तो यदि दृश्यते ।
सहस्रपञ्चसङ्ख्या च तस्य मध्ये स्थितं धनम् ॥ ५१ ॥
आरनालेन सम्पिष्टं मुनिवृक्षस्य पल्लवम् ।
मालिनीमन्त्रजप्तेन तल्लेपेन धनोदयम् ॥ ५२ ॥
आरग्वधस्य मूलानि मुनिवृक्षस्य पल्लवम् ।
वटवल्कललोध्रं च माञ्जिष्ठा च समासतः ॥ ५३ ॥
अरसारजसम्मिश्रं कुलत्थं तत्र लेपयेत् ।
पिष्ट्वा महिषमूत्रेण पश्चात् तत्र प्रलेपयेत् ॥ ५४ ॥
एवं भववचो योगि सर्वपट्टप्रभेदनम् ।
दत्तं त्रिदशभूदेवनक्षत्रं मन्त्रसमन्वितम् ॥ ५५ ॥
यया जयन्ति धीमन्तो वसुधाधरितं धनम् ।
तां वदामि महावर्तिमञ्जनान्यखिलान्यपि ॥ ५६ ॥
जीवजातिसमं किञ्चिद् यत्र यत्रोपयुज्यते ।
जीवस्वरिक्षितं ग्राह्यमथवा कालयोगतः ॥ ५७ ॥
अर्कतूलमयी वर्तिः श्यामातैलेन भाविता ।
वेष्टिता नागवल्लीभिर्ज्वलन्ती दर्शयेन्निधिम् ॥ ५८ ॥
गोधा चुचुन्दरी वचसधा बहुभाविता ।
अर्कतूलमयी वर्तिर्भूमिगां दर्शयेन्निधिम् ॥ ५९ ॥
अर्कतूलमयी वर्तिर्भेकतैलेन भाविता ।
गोशृङ्गस्थापिता दीप्ता पाताले दर्शयेन्निधिम् ॥ ६० ॥

---

१. 'कृष्ण श्येनाधिवा पट्टो लेपते यदि', २. 'वल्कलम्' ग. पाठः. ३. 'बह्वापट्टं प्र', क. पाठः. ४. 'नतिनं ग्रीशम', ५. 'जातयासुब' क. पाठः. ६. 'र्तिः केतकीतै' ग. पाठः.

